I st Copy

Vedavyas

Sri Skandamahapuran - Chaturtha - Kashikhanda - with tika

श्रीस्कांदमहापुराण - चतुर्थ - काशीखंड - टीकासहित

Sanskrit

Paper - Printed

1965 sambat (110 years old)

372 Folio

14.5" x 7"

Complete

अथ श्रीस्कांदमहापुराणांतर्गतचतुर्थंकाशीखंडपूर्वार्धं सटीकमारभ्यते ।

ॐ तत्सत्

पञ्चपञ्चाशदुत्तराष्टादशशततमे शालिवाहनशकाब्दे वैशाखवद्यतृतीयायां तिथौ भृगुवासरे श्रीमतां शिङ्कनगौडमहोदयानां स्मारकनिमित्तं तत्पुत्रैः श्रीमद्भिः शङ्करगौडमहोदयैर्यात्रार्थं काशीगतैर्विश्वाराध्यमहासंस्थानाय भक्तिपुरःसरं प्रदत्तमिदम्.

वेणुपुर(बेळगांव) मण्डलान्तर्गत सङ्केश्वर-
पुरनिवासी:— ता. १२-५-१९३३.

[illegible]
[illegible]

# प्रस्तावना ।

अद्य सानन्दं निवेद्यते सर्वेषामपि सज्जनानां पुरतो नितान्तरम्यं पुरातनविषयमपि नूतनायितं पुराणपुरुषोत्तममाहात्म्यकथानकोपनिबद्धविचित्रचरित्रचातुरीधुरीणतया सार्वजनीनं वृत्तम् । विदितमेव खल्वस्ति समस्तवैदिकधर्मानुयायिनां सज्जनानाम्—यदिह भगवता शब्दब्रह्मस्वरूपिणाऽनिरुद्धांशस्वरूपेण सकलवाङ्मयमाविर्भावयांचक्रे वेदस्वरूपस्वरूपपरिणामेनेति । ततश्च सुस्पष्टमेव सिद्धं सर्वं वाङ्मयं भगवत्स्वरूपमेवेति । एतदेवाभिप्रेत्योक्तं श्रीमद्भागवत एकादशस्कन्धे—"स एव जीवः परमात्मसंज्ञकः प्राणेन घोषेण गुहां प्रविष्टः । मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः ॥" इति । अत एव 'वेदो नारायणः' इत्यप्युच्यते । वेदस्वरूपत्वं सकलवाङ्मयस्य प्रथमः परिणामः प्रोक्तप्राक्तनभागवतवचनतः सिध्यति । ततश्च—"यो वै ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति श्रुतिवचनतः परमेष्ठिनः प्रजापतेः प्राक्तनत्वं नत्वेतावदेव अपि तु सनातनत्वमेव वेदानाम् । अत एवेदं प्रकृत्य मनुस्मृतावप्युच्यते—"अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् । दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम् ॥" इति । नचात्र दोहनेन नव्यकल्पनाशङ्कायाः कथञ्चिदवसरः, धेनूधसि सिद्धस्थितेरेव पयसो दोहनौचित्यवत्सनातनस्यापि वेदस्य शतपथब्राह्मणप्रोक्तदिशाऽध्यात्मस्थिताग्निवायुरविभ्य औदरजातवेदऔरसप्रश्वासमास्तिष्कसूर्याभितपनतः प्रादुर्भावस्य समुचितं प्रादुर्भावनम् । सैषा सनातनी वेदरूपा वाङ्मयी भगवतोऽनादिरनन्ता मूर्तिरिति सुबहुप्रमागतः सिद्धोऽयं विषयः श्रीमन्माधवाचार्यादिभिर्ऋग्वेदभाष्यादौ सम्यग्विवेचित एव । अथ चैवं स वेदपुरुषो भगवान्निखिलजीवजैवातृकतयैहिकामुष्मिकानर्थान्संप्रदर्श्य कृतार्थयन्भव्यभाविकजनान्ययोचितकर्मज्ञानोपासनात्मककाण्डत्रयप्रतिपादितमव्यभावुकसंप्रदर्शनेन विराजतेतराम् । अथ च तदर्थोपबृंहणाय पुराणेतिहासानां प्रथमतः प्रादुर्भावो बभूव । तान्येतानि पुराणानि—पुराणानि तु वैदिकान्येवासन्ब्राह्मणादिरूपाणि । अथ कालमहिम्ना मनुजबुद्धिमान्द्यमवलोकयता भगवता जगतीतले चातुर्वर्ण्यव्यवस्थायां च सप्रचारायां तत्र च केषांचिद्वेदानधिकारं च विमृश्य तदर्थस्योपलब्ध्यै प्राचीनतरवैदिकसंप्रदायतत्त्वस्य नवीनतया स्वोपज्ञत्वमुपनिवेर्णयिषिश्चिकीर्षया श्रीव्यासावतारं धृत्वाऽष्टादशमहापुराणप्रबन्धरचनया स्वकीयवेदवागुपनिबद्धं रहस्यार्थकदम्बकं क्रमेणाविर्भावितम् । तदेतदुक्तं गारुडमहापुराणे २२७ तमेऽध्याये—"पुराणमेकमेवासीत्सर्वकल्पेषु मानद ॥ चतुर्वर्गस्य बीजं च शतकोटिप्रविस्तरम् ॥ प्रवृत्तिः सर्वशास्त्राणां पुराणादभवत्ततः ॥ कालेनाग्रहणं दृष्ट्वा पुराणस्य महामतिः ॥ हरिर्व्यासस्वरूपेण जायते च युगेयुगे ॥ चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा ॥ तदष्टादशधा कृत्वा भूर्लोके निर्दिशत्यपि ॥ अद्यापि देवलोके तु शतकोटिप्रविस्तरम् । अस्त्येव तस्य सारस्तु चतुर्लक्षेण वर्ण्यते ॥" इति । तानि चैतानि सुप्रसिद्धानि तावन्महापुराणानि—"ब्राह्मं पाद्मं वैष्णवं च वायवीयं तथैव च ॥ भागवतं नारदीयं मार्कण्डेयं च कीर्तितम् ॥ आग्नेयं च भविष्यं च ब्रह्मवैवर्तलैङ्गके ॥ वाराहं च तथा स्कान्दं वामनं कौर्मसंज्ञकम् ॥ मात्स्यं च गारुडं तद्वद्ब्रह्माण्डाख्यमिति त्रिषट् ॥" इति । एतेषु पुराणेषु सर्ववेदार्थोऽनुस्यूतः सूत्ररूपेण । तस्यैव चोपबृंहणार्थं पुराणोपयोग इति च—"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्" इति वचनेनैव सिद्धमिति च सर्वविद्वज्जनविदितमेव । अथ च प्रकृते किञ्चित्प्रस्तूयते—

एतेषु महापुराणेषु च तावत्त्रयोदशं स्कान्दं महापुराणम् । तत्र चैकाशीतिसाहस्रसंहितात्मके स्कान्दमहापुराणे हि सप्त खण्डानि सन्ति । तानि चोक्तानि नारदमहापुराणोक्तानुसारेण—"माहेश्वरो वैष्णवब्राह्मकाश्यावन्तिका नागरमत्र षष्ठम् ॥ प्राभासिको विप्रवरेण खण्डाः स्कान्दे पुराणे कथिताः सुपुण्याः ॥" इति कैश्चिदभियुक्तैः । एवं चैकाशीतिसाहस्रसंहितात्मकं श्रीस्कान्दमहापुराणं विद्यते । यच्च पञ्चाशत्खण्डमण्डितं स्कान्द

पुराणं विद्यते तच्चोपपुराणान्तर्गतमेव । नारदीयमहापुराणे तु सप्तखण्डात्मकमेवैतत्स्कान्दमहापुराणं समस्तखण्डानुक्रमणिकोपेतं महापुराणत्वेन परिगण्यते । अतः सप्तखण्डात्मकमेव स्कान्दं महापुराणम्—इति सर्वसंमतम् । एतद्विषये विशेषं तु समस्तस्कान्दमहापुराणप्रस्तावनायामस्माभिर्विविच्य निदर्शितं पश्यन्तु विद्वांस इत्यभ्यर्थ्य प्रकृतमनुसरामः । तच्च श्रीस्कान्दमहापुराणमस्माभिः स्वकीये "श्रीवेङ्कटेश्वर" मुद्रणालये मुद्रयित्वा प्रकाशयितुमुपक्रान्तमस्ति । इदं च श्रीस्कान्दमहापुराणान्तर्गतं चतुर्थं श्रीकाशीखण्डं शताध्यायात्मकं पूर्वार्धोत्तरार्धविभेदभिन्नं सविस्तरश्रीकाशीक्षेत्रमाहात्म्यसंसूचकं वरीवर्ति । अत्र श्रीमदविमुक्तक्षेत्रस्थसकलदेवतीर्थक्षेत्रतपःस्थलमहिमा लोकोत्तरसच्चरित्रसंदर्भसमुपबृंहितः सकलसांसारिकजनोद्दिधीर्षया जागर्ति सद्वृन्दैः—"शिवः काशी शिवः काशी शिवः काशी शिवः शिवः ॥ शिवः काशी शिवः काशी काशीकाशी शिवः शिवः ॥" इत्यादितन्नामनिर्देशपुरःसरं जोघुष्यमाणः । अत एवेदं श्रीकाशीखण्डं श्रीकाशीक्षेत्रमाहात्म्यसूचकं सर्वजनसमादरणीयतामर्हति । एतस्य रचनाचातुर्यं श्रीव्यासमहर्षेः संस्कृतसरस्वतीसौन्दर्यं प्रकाशयति । एतस्य श्रीकाशीखंडस्य सुस्पष्टार्थबोधाय परममान्यविद्वद्वरिष्ठश्रीमत्परमहंसपरिव्राजकाचार्यभगवत्पूज्यपादशिष्यश्रीरामेन्द्रवनशिष्यश्रीरामानन्दमुनीन्द्रवर्यैः सरला सुबोधाऽनेकप्रमाणैरुपबृंहिता विद्वज्जनमनोरञ्जनी व्युत्पित्सुजनसाहाय्यकारिणी टीका निर्मितास्ति । अथ च पृथक्तया केवलसटीककाशीखण्डजिघृक्षूणां सज्जनानां केवलकाशीखण्डलब्धये पृथगपि मुद्रयित्वेदं प्रकाशमानीयत । अतश्च संप्रार्थयामः समस्तसज्जनान्—येषां श्रीस्कान्दमहापुराणं समग्रं संजिघृक्षितं ते समग्रस्कान्दमहापुराणसंग्रहाय स्वाभिप्रायं निवेदयेयुः । येषां केवलं श्रीकाशीखण्डमेव संग्रहणीयं स्याच्च एतत्सटीकमतिशुद्धमास्माकीन "श्रीवेङ्कटेश्वर" मुद्रणालये पुष्टचिक्कणपत्रेषु मुद्रयित्वा प्रकाशितं संगृह्य सफलयन्तु मे मुद्रणपरिश्रममिति सविनयमभ्यर्थयते—

श्रीमतां कृपाकांक्षी—क्षेमराज श्रीकृष्णदास, "श्रीवेङ्कटेश्वर" स्टीम्—मुद्रणालयाध्यक्षः—मुंबई.

पुराणं विद्यते तच्चोपपुराणान्तर्गतमेव । नारदीयमहापुराणे तु सप्तखण्डात्मकमेवैतत्स्कान्दमहापुराणं समस्तखण्डानुक्रमणिकोपेतं महापुराणत्वेन परिगण्यते । अतः सप्तखण्डात्मकमेव स्कान्दं महापुराणम्—इति सर्वसंमतम् । एतद्विषये विशेषं तु समस्तस्कान्दमहापुराणप्रस्तावनायामस्माभिर्विविच्य निर्दर्शितं पश्यन्तु विद्वांस इत्यभ्यर्थ्य प्रकृतमनुसरामः । तच्च श्रीस्कान्दमहापुराणमस्माभिः स्वकीये "श्रीवेङ्कटेश्वर" मुद्रणालये मुद्रयित्वा प्रकाशयितु मुपक्रान्तमस्ति । इदं च श्रीस्कान्दमहापुराणान्तर्गतं चतुर्थं श्रीकाशीखण्डं शताध्यायात्मकं पूर्वार्धोत्तरार्धविभेदभिन्नं सविस्तरश्रीकाशीक्षेत्रमाहात्म्यसंसूचकं वरीवर्ति । अत्र श्रीमदविमुक्तक्षेत्रस्थसकलदेवतीर्थक्षेत्रतपःस्थलमहिमा लोकोत्तरसच्चरित्रसंदर्भसमुपबृंहितः सकलसांसारिकजनोद्दिधीर्षया जागर्ति सद्वृन्दैः—"शिवः काशी शिवः काशी शिवः काशी शिवः शिवः ॥ शिवः काशी शिवः काशी काशीकाशी शिवः शिवः ॥" इत्यादितन्नाम निर्देशपुरःसरं जोघुष्यमाणः । अत एवेदं श्रीकाशीखण्डं श्रीकाशीक्षेत्रमाहात्म्यपूर्वकं सर्वजनसमादरणीयतामर्हति । एतस्य रचनाचातुर्यं श्रीव्यासमहर्षेः संस्कृतसरस्वतीसौन्दर्यं प्रकाशयति । एतस्य श्रीकाशीखंडस्य सुस्पष्टार्थबोधाय परममान्यविद्वद्वरिष्ठश्रीमत्परमहंसपरिव्राजकाचार्यभगवत्पूज्यपादशिष्यश्रीरामेन्द्रवनशिष्यश्रीरामानन्दमुनीन्द्रवर्यैः सरला सुबोधाऽनेकप्रमाणैरुपबृंहिता विद्वज्जनमनोरञ्जनी व्युत्पित्सुजनसाहाय्यकारिणी टीका निर्मितास्ति । अथ च पृथक्तया केवलसटीककाशीखण्डजिघृक्षूणां सज्जनानां केवलकाशीखण्डलब्धये पृथगपि मुद्रयित्वेदं प्रकाशमानीयत । अतश्च संप्रार्थयामः समस्तसज्जनान्—येषां श्रीस्कान्दमहापुराणं समग्रं संजिघृक्षितं ते समग्रस्कान्दमहापुराणसंग्रहाय स्वाभिप्रायं निवेदयेयुः । येषां केवलं श्रीकाशीखण्डमेव संग्रहणीयं स्यात्त एतत्सटीकमतिशुद्धमास्माकीन "श्रीवेङ्कटेश्वर" मुद्रणालये पुष्टचिक्कणपत्रेषु मुद्रयित्वा प्रकाशितं संगृह्य सफलयन्तु मे मुद्रणपरिश्रममिति सविनयमभ्यर्थयते—

श्रीमतां कृपाकांक्षी—क्षेमराज श्रीकृष्णदास, "श्रीवेङ्कटेश्वर" स्टीम्—मुद्रणालयाध्यक्षः—मुंबई.

# अथ श्रीस्कान्दमहापुराणान्तर्गतकाशीखण्डपूर्वार्द्धोत्तरार्द्धाध्यायस्थितविषयानुक्रमणिका ॥


| अध्यायाः | विषयाः. | प० | पृ० |
|---|---|---|---|
| १ | मंगलाचरणम्, सूताग्रे व्यासस्य काशीखंडकथोपक्रमकरणम्, नारदस्य नर्मदांभसि स्नात्वोंकारमभ्यर्च्य च पुरतो विंध्यपर्वतदर्शनम्, प्रसंगेन विंध्याचलवर्णनम्, मेरुस्त्वामवमन्यत इति नारदमुनेर्वचः श्रुत्वा विंध्यस्य वर्धनेन श्रीसूर्यमार्गावरोधवर्णनञ्च .... ... .... | १ | १ |
| २ | एकतो नैशातिमिरसंबंधादन्यत्र दिवाकरचंडातपात् त्रैलोक्यानवस्थावर्णनम्, देवकृतविधिस्तवनम्, सत्यलोके भयाभावं दर्शयितुं सत्यलोकागंतृपुरुषपुण्याचारवर्णनपूर्वकं विधिकृतदेवसांत्वनम्, ब्रह्मणो वचनात्त्रैलोक्यापन्निवारणाय श्रीक्षेत्रकाशीस्थागस्त्यमुनिसमीपे गन्तुं श्रीकाशीशकाशीदर्शनोत्सुकामरप्रयाणवर्णनम्, संक्षेपतः काशीवर्णनञ्च .... | १० | १ |
| ३ | काशीक्षेत्रे मणिकर्णिकास्नानविश्वेश्वरदर्शनादियात्रां विधाय सुराणामगस्त्यमुन्याश्रमगमनम्, अमरकृतागस्त्याश्रमवर्णनम्, सुराणां तदाश्रमे लोपामुद्रामुन्यगस्त्यरूपदर्शनञ्च .... | १९ | १ |
| ४ | बृहस्पतिप्रणीतागस्त्यमुनिस्तुतिप्रसंगेन लोपामुद्रावर्णनम्, एतत्प्रसंगेन पतिव्रताचारनिरूपणम्, सूर्यमार्गनिरोधकविंध्यवृद्धिनिवारणाय प्रार्थ्यमानसुराचार्यवचनानुसारेणागस्त्यकृतामराश्वासनम्, अमराणां स्वर्लोकगमनञ्च .... .... .... .... ... .... | २० | १ |
| ५ | अमरप्रार्थनामंगीकृत्य विंध्याविवृद्धिनिराकरणाय सह भार्यया अगस्त्यमुनेः काशीक्षेत्राद्बहिः प्रयाणम्, काशिकावियोगदुःखितस्य मुनेर्विश्वनाथकालभैरवादिदैवताज्ञाग्रहणपूर्वकं विशेषतो विलापकरणम्, अगस्त्यमुनिमायांतं दृष्ट्वा विंध्यस्य खर्वतास्वीकारः, यावन्ममागमनं पुनर्भवेत् तावत् खर्वतरो भवेति मुनेरद्रिं प्रति कथनम्, मुनेर्महालक्ष्मीदर्शनम्, अगस्त्यमुनिकृतमहालक्ष्मीस्तोत्रम्, महालक्ष्मीवरदानम्, अगस्त्यस्याग्रे प्रयाणञ्च .... | २३ | २ |
| ६ | परोपकारप्रशंसनम्, श्रीशैलशिखरादिपुण्यस्थानदर्शनेन मुक्तिश्चेत्किं काशीमहत्वमिति लोपामुद्राप्रश्नः, तीर्थमाहात्म्यवर्णनप्रसंगेन काशीक्षेत्रमहत्त्वकथनम्, सर्वतीर्थानि काशीक्षेत्रप्रापकाणीति काशीश्रैष्ठ्यद्योतनञ्च .... .... .... ... .... .... | ३० | २ |
| ७ | शिवशर्माख्यमथुरापुरीस्थद्विजस्य स्वदेहे समागतां जरां दृष्ट्वा चिंतोद्गाराः, सप्तपुरीयात्रार्थं गृहाद्बहिर्द्विजस्य प्रयाणम्, अयोध्यायात्रां समाप्य प्रयागे समागमनम्, प्रसंगेन प्रयागमाहात्म्यवर्णनम्, द्विजस्य काशीयात्राकथनम्, तस्य महाकालपुरीप्रयाणम्, तत्प्रसंगान्महाकालमाहात्म्यकथनम्, मायापुरीतीर्थयात्राकथनम्, द्विजस्य मायापुर्यां देहावसानम्, पुण्यशीलसुशीलनामकवैष्णवगणाधिष्ठितस्वर्णविमानमास्थाय द्विजस्य नभोवर्त्मारोहणञ्च .... .... .... ... .... .... .... .... | ३३ | १ |
| ८ | मुक्तिपुर्यां मायाख्यपुर्यां मृतस्य शिवशर्मणो द्विजस्य कथं मोक्षानवाप्तिरिति लोपामुद्रासतीप्रश्नः, षट्पुरीषु मायादिषु साक्षात्सायुज्यं नास्तीति दर्शयितुं शिवशर्मविष्णुगणसंवादारंभः, द्विजप्रश्नानुसारेण पिशाचगुह्यकगांधर्वलोकस्थितपुरुषसंपादितसदाचारवर्णनम्, यमलोकमागतस्य द्विजस्य शिवशर्मणः सत्कारपूर्वकपूजनार्थं धर्मराजस्यागमनम्, धर्मराजस्य सौम्यमूर्तेः सौम्यवचांसि श्रुत्वा कथमिदमिति द्विजप्रश्नः, यमस्य रूपद्वयनिरूपणप्रसंगेन संक्षेपतो यमलोकव्यवस्थावर्णनञ्च ... .... .... .... .... ... | ३८ | २ |
| ९ | अप्सरोलोकवर्णनम्, सूर्यलोकवर्णनम्, सूर्योपासनावर्णनप्रसंगेन गायत्रीमंत्रमाहात्म्यनिरूपणम्, अर्घप्रदानविधिनिरूपणञ्च .... .... ... .... .... ... | ४३ | १ |
| १० | सहस्राक्षपुरीवर्णनम्, आर्चिष्मत्याख्यवीतिहोत्रपुरीवर्णनम्, कृशानूत्पत्तिकथनप्रसंगेन ज्योतिष्मतीपुरीस्थविश्वानराख्यमुनीतिहासकथनम्, शुचिष्मतीकथनानुसारेण मुनेः | | |

| अ० | विषयाः | प० | पृ० |
| --- | --- | --- | --- |
| | काशीक्षेत्रे गत्वा वीरेश्वरशिवलिंगसमीपे तपोनुष्ठानकथनम्, त्रयोदशे मासि बालरूपेण लिंगे शिवदर्शनम्, अभिलाषाष्टकस्तोत्रकथनम्, शिवाद्वरलाभेन संतुष्टस्य मुनेः स्वगृहे प्रयाणञ्च .... ... .... .... ... .... .... .... | ४६ | २ |
| ११ | कालान्तरेण विश्वानरांच्छुचिष्मत्यां गर्भाधानम्, शुभमुहूर्ते सुतोत्पत्तिः, जातकर्मादिसंस्कारनिरूपणम्, हस्तसामुद्रिकं वीक्ष्य नारदोक्तं बालस्य वैश्वानरस्य गंडांतंश्रुत्वा मातापित्रोः शोककरणम्, अपमृत्युहरणाय मुनिकुमारस्य काश्यां लिंगं संस्थाप्यानुष्ठानकरणम्, तृतीयसंवत्सरे वरप्रदानाय समागतस्य कुलिशायुधस्य मुनिकुमारं प्रति वचनम् नाहं त्वत्तो वरान् प्रहीतुमुत्सहे इति वचः श्रुत्वा इन्द्रस्य कुलिशपातनोद्योगं विलोक्य मुनिकुमारस्य मूर्च्छावगमः, तत्रैव शिवप्रादुर्भावः, शिववराद्वैश्वानरस्य दिक्पतित्वादिप्राप्तिवर्णनञ्च ... .... ... .... ... .... .... | ५१ | १ |
| १२ | नैर्ऋतलोकवर्णनम्, विन्ध्याटव्यां पल्लीपतेः पिंगाक्षस्य विश्वनाथपुरीयातुकामसार्थप्राणपरिरक्षणार्थं प्राणदानाल्लोकपालत्वप्राप्तिः, वारुणलोकवर्णनम्, कर्दमस्य प्रजापतेः पुत्रस्य शुचिष्मतो जलक्रीडायां शिशुमारेण सरस्याहरणम्, सरसि मग्नं श्रुत्वाऽपि सुतं पूजायामधिकासक्तस्य सविधे मुनेः शिवगणेन साशिशुमारस्य बालकस्यानयनम्, शुचिष्मतो मुनिकुमारस्य काश्यां शिवलिंगं संस्थाप्य तपश्चरणम्, शिवप्रसादाद्वारुणलोकसंप्राप्तिश्च | ५७ | २ |
| १३ | जगत्प्राणस्य पवनस्य गंधवतीपुरीवर्णनम्, कश्यपपुत्रस्य पूतात्मनः श्रीकाशीक्षेत्रे लिंगं संस्थाप्य तपश्चरणम्, तस्य शिवाल्लोकपालत्वप्राप्तिकथनम्, गुह्यकेश्वरस्यालकावतीपुरीवर्णनम्, कांपिल्यनगरे यज्ञदत्तनाम्नो ब्राह्मणस्य नाम्ना गुणनिधिरप्यगुणनिधिर्द्यूतासक्तो मद्यपः पुत्रो बभूव तस्य बहुकालं मात्रा प्रच्छन्नदुराचारस्य सुतस्य दुष्कृतिं संपश्यता पित्रा स्वगृहान्निष्कासनम्, स्वार्थदीपदशोद्द्योतेन लिंगमौलितमोहरस्य बहूपोषितस्यास्य शिवरात्र्यां शिवालयेऽन्नापहरणाद्धातितस्य कालिंगदेशराजपुत्रत्वप्राप्तिवर्णनम्, तत्र तस्य शिवालयेषु दीपदानात्कल्पे विश्रवःसुतत्वमधिगम्य दुःसहतपश्चरणतः शिवसख्यालकाराज्यादिलाभवर्णनञ्च ... ... .... .... ... ... ... ... | ६१ | १ |
| १४ | रुद्रभक्तोषितैशानीपुरीवर्णनम्, अजैकपादादिरुद्रगणस्थापितैशानलिंगमाहात्म्यवर्णनम्, चन्द्रलोकवर्णनम्, ब्रह्मणो मानसात्समुद्भूतस्य सोमस्य वाराणस्यां लिंगं विधाय तत्पुरो महत्तपश्चरणम्, शिवप्रसादाच्चस्य महैश्वर्यलाभकथनञ्च .... .... ... ... | ६६ | २ |
| १५ | दक्षप्रजापतेः षष्टिदुहितृभिरेकपतिलाभाय लिंगं संस्थाप्य वाराणस्यां तपःकरणात् शिववरानुसारतः सोमं पतिमासाद्य संपादितस्य नक्षत्रलोकस्य संक्षेपतो वर्णनम्, अत्रिपुत्रस्य सोमस्य गुरुभार्यापहरणम्, रुद्रचंद्रमसोर्युद्धकथनम्, युद्धं निवार्य ब्रह्मणो वचनाच्चंद्रस्य बृहस्पतये तारासमर्पणम्, तस्यां बुधस्योत्पत्तिः, बुधकृतशिवाराधनम्, बुधस्य शिववराल्लोकपालत्वादिवरैश्वर्यलाभवर्णनञ्च .... .... .... ... .... .... | ६८ | २ |
| १६ | समरे देवैर्घातितानां दानवेंद्रांधकसैनिकानां संजीवनीमंत्रतो भार्गवशुक्रकृतं पुनरुज्जीवनम्, देवप्रार्थनया नंदिकेश्वरादानाय्य शुक्रस्य शिवेन मुखे निक्षेपणम्, अंधकस्य ससैन्यस्य प्रमथैः सह युद्धवर्णनम्, शुक्रतः शुक्रस्य बहिर्निःसरणम्, शुक्रस्य वाराणस्यां तपश्चरणाच्च् शिवप्रसादतो लोकाधिपत्यादिवरप्राप्तिवर्णनञ्च .... ... .... .... .... | ७१ | २ |
| १७ | श्रीशिवस्य भूमौ निपतिताद् भालस्थलतः स्वेदबिंदोर्लोहितांगस्योत्पत्तिः, शिवप्रसादाच्चस्य लोकाधिपत्यादिकथनम्, आंगिरसस्य शिवप्रसादार्थं वाराणस्यां तपःकरणम्, शिवस्य वरप्रसादाल्लोकपतित्वदेवगुरुत्वलाभः, मार्तण्डात्संज्ञाप्रतिकृतौ छायायां शनैश्चरोत्पत्तिकथनम्, तस्य वाराणस्यां तपश्चरणाल्लोकपालत्वग्रहमुख्यत्वलाभवर्णनञ्च ... .... | ७६ | २ |
| १८ | मरीच्यादिब्रह्ममानससुसप्तपुत्रसप्तर्षिलोकवर्णनम्, अरुंधतीनक्षत्रस्थानदर्शनादिवर्णनञ्च .... | ८१ | १ |
| १९ | पितुरंकाधिष्ठितस्य सपत्नमात्रा तिरस्कृतस्य ध्रुवस्य मातृवचनात् तपस्यार्थं विपिनप्रवेशः तत्र सप्तर्षिसमागमः, द्वादशाक्षरमंत्रमुपदिश्य मुनीनामन्तर्धानञ्च .... .... | ८२ | १ |

| अ० | विषयाः | प० | पृ० |
|---|---|---|---|
| २० | यमुनातटे मधुवने स्थितस्य ध्रुवस्य तपस्यावर्णनम्, इन्द्रप्रेषितनानाविधतपोविघ्ननिरूपणम्, ध्रुवस्य साक्षाच्च श्रीभगवतो दर्शनञ्च .... ... ... ... ... ... | ८६ | २ |
| २१ | ध्रुवकृतश्रीभगवत्स्तोत्रनिरूपणम्, ज्योतिश्चक्रस्य आधारपदं ते दास्यामि तथापि मया सह काशीं याहि तत्र लिंगार्चनं कृत्वा कृतकृत्यो भवेति ध्रुवं संदिश्य तेन सह भगवतः काशीपुर्यां प्रयाणम्, तत्र ध्रुवस्य लिंगसंस्थापनेन कृतकृत्यत्वमासाद्य स्वगृहे प्रयाणञ्च .... ... ... ... ... .... .... .... .... | ९० | १ |
| २२ | महर्जनस्तपोलोकवर्णनम्, सत्यलोके समागतानां ब्रह्मणा सह संवादाः, द्विजप्रशंसनपूर्वकं ब्रह्मकृतकाशीवर्णनञ्च .... .... .... ... ... ... .... | ९६ | १ |
| २३ | भूलोकाच्छिवलोकपर्यंतं योजनप्रमाणकथनम्, शिवोपासनतो विष्णोरात्मसाम्यप्राप्तिकथनपूर्वकं शिवकृतविष्ण्वभिषेकवर्णनञ्च ... .... .... .... .... ... | ९९ | १ |
| २४ | द्विजस्य मायापुर्यां मरणतो विष्णुलोके ब्रह्मणो वत्सरपर्यंतं बहुविधोपभोगप्राप्तिः, ततश्च पुण्यक्षये नंदिवर्धनग्रामे भूपत्वमासाद्य प्रजारंजनकर्तुरस्य काशीमाहात्म्यश्रवणसंजातहर्षस्य काश्यां प्रयाणम्, विश्वेश्वरानुग्रहात् तत्र शिवप्रासादं विधाय वृद्धकालेश्वराख्यस्थापितशिवलिंगाग्रे तपस्यतः परीक्षणार्थमागतशिवपरीक्षणोत्तरं सह तेन सस्त्रीकस्य राज्ञस्तस्मिन्नेव लिंगे लयो भविष्यति इति विष्णुगणप्रतिपादितशिवशर्मद्विजभाविस्थितिवर्णनम् | १०१ | १ |
| २५ | अगस्त्यमुनेः सभार्यस्य श्रीगिरिं प्रदक्षिणीकृत्य स्कंदवने कुमारदर्शनम्, अगस्त्यकृतस्कंदस्तोत्रम्, काशीमाहात्म्यविषये स्कंदं प्रति मुनिप्रश्नः, स्कंदनिरूपितकाशीवासफलकथनञ्च | १०४ | २ |
| २६ | अविमुक्तक्षेत्रोत्पत्तिवर्णनम्, चक्रपुष्करिणीतीरे विष्णोस्तपोवर्णनम्, मणिकर्णिकाया उत्पत्तिवर्णनम्, मणिकर्णिकास्नानविधिकथनञ्च .... .... .... .... .... | १०७ | २ |
| २७ | गंगामाहात्म्यवर्णनं दशहरास्तोत्रकथनञ्च .... .... .... ... .... | ११३ | १ |
| २८ | शिवाधिष्ठानगौरवतः काश्यां गंगास्नानान्महापातकोपपातकशमनवर्णनम्, कलिंगदेशे वाहीकनाम्नः कस्य चिन्नाममात्रद्विजस्य वृषलीपत्युः अरण्ये व्याघ्रेण मारणम्, सास्थि .......गांसं समादाय गच्छतो गृध्रस्य अन्यगृध्रेण युद्धम्, दैवतस्तदस्थिगंगाजलसंगमान्महाश्चर्यम् नानाविधपातकक्षालनाय कुंभीपाकादिनरकेषु प्रक्षिप्तस्यापि सुखावाप्तिं विलोक्य सर्वेषां विस्मयकरणम्, अन्ते विमानमारुह्य वाहीकस्य स्वर्गलोकप्रयाणम्, गंगामाहात्म्यकथनञ्च ... .... .... ... ... ... .... .... ... | ११९ | १ |
| २९ | अशक्तानां स्नानतुल्यफलावाप्तिमिच्छूनां महावीघनिवारकश्रीगंगासहस्रनामस्तोत्रम् ... | १२२ | १ |
| ३० | मणिकर्ण्यां भगीरथनृपानीतगंगासंगमात् क्षेत्रमाहात्म्याधिक्यकथनम्, दक्षिणोत्तरभागे असिवरणावस्थितिकथनम्, देहलीविनायकस्य शिवाज्ञां विना अंतःप्रवेशं कुर्वतां विघ्नोत्पादनाय नियोजनम्, धनंजयवणिगितिहासकथनम्, काश्या वाराणसीनामव्याख्यानञ्च ... ... ... ... .... .... .... .... .... | १३६ | १ |
| ३१ | ब्रह्मणः शिरश्छेत्तुं शिवात्कालराजस्योत्पत्तिः शिवनिंदाकारिब्रह्मशिरश्छेदात्कालराजस्य कापालिकवेषेण काश्यां प्रयाणम्, तत्र गतस्य कालभैरवस्य पृष्ठलग्नाया ब्रह्महत्यायाः पातालगमनम्, तत्र कपालमोचनतीर्थे सर्वेषां पातकक्षालनाय कालभैरवस्थितिवर्णनञ्च | १४२ | २ |
| ३२ | पूर्णभद्रनामकयक्षस्य शिवाराधनात्कनककुंडलाख्यभार्यायां हरिकेशाभिधपुत्रजन्मकथनम्, बाल्यावस्थामारभ्य शिवासक्तस्य हरिकेशस्य पितुस्ताडनभयात् गृहान्निर्गतस्य काश्यां प्रयाणम्, पार्वतीं प्रति शिवनिरूपितानंदकाननवर्णनम्, आनंदकानने हरिकेशस्य तपःसंतुष्टमहेश्वरवराद् दंडपाणित्वकथनम्, दंडपाण्यष्टककथनञ्च ... .... .... | १४७ | २ |
| ३३ | ज्ञानवपीनामकतीर्थोत्पत्तितन्माहात्म्यवर्णनम्, काशीनिवासिहरिस्वामिकन्याया ज्ञानवापीं सेवमानायास्तद्रूपमोहितविद्याधरेणाहरणम्, मलयपर्वते विद्याधरेण साकं राक्षसस्य युद्धवर्णनम्, युद्धे राक्षसविद्याधरयोः परस्परप्रहारेणैव मरणाद्धरिस्वामिकन्याया विद्याधरं पतिं मन्यमानाया देहपरित्यागकथनम्, उभयो राजदेहमासाद्य तत्र चित्रपटीविलोकनञ्च .... | १५५ | २ |
| ३४ | माल्यकेतुकलावत्योस्तयोः काशीप्रयाणम्, तत्र काशीयात्रां विधाय ज्ञानवापीनिकटे शिवोपदेशाद्विमानमारुह्योभयोः शिवलोकगमनकथनम्, ज्ञानवापीमाहात्म्यकथनञ्च .... | १६१ | १ |

| अ० | विषयाः | प० | पृ० |
|---|---|---|---|
| ३५ | काशीप्रापकब्राह्मणसदाचारवर्णनप्रसंगेन नित्यकर्तव्यधर्मनिरूपणम् .... .... ... | १६४ | २ |
| ३६ | सदाचारवर्णनप्रसंगेन द्विजानां ब्रह्मचर्यधर्मनिरूपणम् .... .... .... ... | १७४ | २ |
| ३७ | सुलक्षणां स्त्रियं विना गृहस्थाश्रमस्य न सिद्धिस्तस्माद्विस्तरेण स्त्रीलक्षणनिरूपणम ... | १७७ | १ |
| ३८ | अष्टविधविवाहवर्णनम्, शुभाचारस्य द्विजादीनां काशीप्राप्तिकारस्य विस्तरेण कथनञ्च .... | १८२ | १ |
| ३९ | दिवोदासनृपेतिहासकथनप्रसंगेनाविमुक्ते क्षेत्रे अविमुक्तेशाशिवलिंगोत्पत्तिवर्णनम् ... | १८५ | २ |
| ४० | काशिकाक्षेत्रगमनविघ्नविधायिद्विजादिनिषिद्धाचारस्वरूपवर्णनम्, गृहस्थाश्रमिणां विहिताचारनिरूपणञ्च .... .... ... .... .... .... .... .... | १८८ | १ |
| ४१ | वानप्रस्थयतिधर्माणां विस्तरेण निरूपणे योगाख्यानम् .... .... .... .... | १९३ | १ |
| ४२ | निकटासन्नमृत्युचिह्नकथनपूर्वकं श्रीक्षेत्रकाशीमाहात्म्यमिश्रितकालवंचनोपायकथनम् .... | २०० | २ |
| ४३ | दिवोदासे काश्या मुषित्वा भुवो राज्यं शासति सर्वेषां विश्वेश्वरादिदेवानां भुवं परित्यज्य मंदराचलगमनम्, दिवोदासराज्ये प्रजासौख्यवर्णनम्, भुवं परित्यज्य अग्नेरपि स्वर्गगमनं विलोक्य राज्ञा व्याहृतस्य स्वसामर्थ्यस्य वर्णनञ्च ... ... .... .... | २०२ | २ |
| ४४ | विश्वनाथभवान्योर्मंदरगिरिवरे स्थितयोः काशीवियोगदुःखवर्णनम्, दिवोदासनृपस्य काशीक्षेत्रपरित्यागार्थं शिवस्य योगिनीगणप्रेषणवर्णनञ्च ... .... .... ... .... | २०६ | १ |
| ४५ | चतुःषष्टियोगिनीनां शिवाज्ञया काशीपुरे राज्ञो दिवोदासस्य विघ्नार्थं प्रवेशकथनम्, तासां नामनिरूपणञ्च .... ... ... .... ... .... .... .... | २१० | १ |
| ४६ | दिवोदासस्य विघ्नमुत्पाद्य काश्यां बहिर्निष्कासनाय शिवादिष्टरव्यागमनम्, दिवोदासराज्ये नानाविधप्रयत्नेन छिद्रान्वेषणोद्यतस्य रवेर्द्वादशधा आत्मानं विभज्य काश्यामेव निवासकथनम्, लोलार्कस्थानकथनम्, तत्तीर्थयात्राविधिमाहात्म्यकथनञ्च .... .... | २११ | २ |
| ४७ | उत्तरार्ककुंडानिरूपणम्, तत्र स्थिताया द्विजकन्याया मातापित्रोर्मरणानन्तरं उत्तरार्कसमीपे तपश्चरणम्,तस्यै स्वसखीत्वरूपगौरीवरप्रदानम्, उत्तरार्ककुंडमाहात्म्यनिरूपणञ्च | २१३ | २ |
| ४८ | कृष्णपुत्रस्य सांबस्य नारदापमानात् कृष्णशापप्रभवकुष्ठरोगावगमकथनम्, तत्परिहाराय काश्यां तस्य स्वनाम्ना कुंडं विधाय तपश्चरणाद्रोगनिवृत्तिः कुंडमाहात्म्यसहितसांबादित्यमाहात्म्यकथनञ्च .... .... .... ... .... ... .... | २१५ | १ |
| ४९ | पांडवानां वनवासप्रसंगेन काश्यां गमनम्, तत्र द्रौपदीकृतसूर्याराधनात् तस्यै सूर्यतः स्थालीप्राप्तिः, द्रौपद्याराधितरवेः स्थाननिरूपणम्, मयूखादित्यमाहात्म्यवर्णनञ्च .... .... | २१७ | १ |
| ५० | उच्चैःश्रवसो वर्णविषये कद्रूविनतयोर्वादकथनम्, तत्र कापट्येन विनतायाः पराभवात् कद्रूदास्यकरणम्,मातुर्दास्यापनोदाय गरुडस्य सुधाहरणवर्णनम् ,विनतागरुडयोः काश्यां शिवलिंगस्थापनपूर्वकं तपश्चरणम्, तयोर्वरप्रदानपूर्वकखखोल्कादित्यस्थानमाहात्म्यकथनञ्च | २२० | १ |
| | इति श्रीकाशीखंडपूर्वार्धानुक्रमणिका समाप्ता । | | |
| ५१ | अरुणादित्यमाहात्म्यवर्णनम्, विनतादास्यकारणकथनम्,वृद्धहारीतोपासितवृद्धादित्यमाहात्म्यकथनम्, विष्णुवचनात्काश्यां शिवलिंगं प्रतिष्ठाप्य सूर्यस्य तपश्चरणम्, तस्य केशवादित्यनामप्राप्तिपूर्वकमाहात्म्यवर्णनम् , विमलगंगायमादित्यानां संक्षेपतो वर्णनञ्च .... | २२६ | १ |
| ५२ | दिवोदासनृपनिष्कासनाय शिवप्रेषितस्य चतुराननस्य द्विजवेषेण काश्यां दशाश्वमेधकरणात्तीर्थस्य दशाश्वमेधनामकरणकथनम्, तत्तीर्थमाहात्म्यवर्णनञ्च ... .... | २२९ | १ |
| ५३ | शिवप्रेषितानां योगिनीभानुविधीनां काश्यामेव शिवलिंगानि संस्थाप्य तत्रैव स्थितानां स्थितिं परिज्ञातुं दिवोदासस्य निष्कासनाय च शंकुकर्णादीनां शिवाज्ञया काशीप्रयाणवर्णनं काशीवर्णनञ्च .... .... .... .... ... ... .... .... | २३१ | २ |
| ५४ | शंभोरत्यंतप्रियकपर्दिगणस्थापितशिवलिंगमाहात्म्यवर्णनप्रसंगेन वाल्मीकिसंज्ञकद्विजेतिहासकथनम्, तत्कृतपिशाचोद्धारवर्णनम् , पिशाचमोचनतीर्थयात्रामाहात्म्यकथनञ्च .... | २३५ | १ |
| ५५ | पिंगलादिगणस्थापितशिवलिंगमाहात्म्यनिरूपणम्,येये गणाद्याः काशीस्थितिं विलोकयितुं शिवेन प्रेषितास्तेषा मपुनरावृत्तिं विलोक्य काश्यां शिवाज्ञया गणेशस्य प्रवेशवर्णनञ्च | २३७ | २ |
| ५६ | गणेशस्य ज्यौतिषिकद्विजवेषमाश्रित्य काश्यां प्रवेशवर्णनम्, स्वमायया पुरीस्थितानेकजनमोहं विधाय राज्ञोंतःपुरे गणेशस्य राजस्त्रीभिः सहालापादिवर्णनम्, दिवोदासनृपसमागमे राज्ञो वर्णनपूर्वकं गणेशस्य तस्मै किंचिद्भविष्यकथनञ्च .... ... .... | २३९ | १ |
| ५७ | विष्णुना दिवोदासे काशीत उच्चाटिते सति मंदरादागत्य काश्यां शिवेन कृताया गणेशस्तु- | | |

| अ० | विषयाः. | प० | पृ० |
|---|---|---|---|
| ७८ | यमधर्माराधितधर्मेश्वराख्यशिवलिंगमाहात्म्यनिरूपणम् .... .... .... .... | ३१६ | २ |
| ७९ | धर्मतपःसाक्षिणां कीरशिशूनां शिववरात्कैलासपदाप्तिकथनपूर्वकं धर्मेशमाहात्म्यकथनम् | ३१७ | २ |
| ८० | पुलोमजां प्रति शिवनिरूपितस्य चैत्रशुक्लतृतीयामारभ्य फाल्गुनशुक्लतृतीयापर्यंतं विश्वभुजाख्यगौरीविनायकदैवतमनोरथतृतीयाव्रतस्य विस्तरेण वर्णनम् .... .... .... | ३२० | १ |
| ८१ | सुरगुरोर्वचनाद्वृत्रहत्योद्भवत्राससंतप्तेंद्रस्य काश्यामुत्तरवाहिन्यां स्नात्वा धर्मेशाख्यशिवलिंगसन्निधौ तपश्चरणम्, ब्रह्महत्यानिवृत्तिपूर्वकमिंद्रस्य पूर्ववत्तेजःप्राप्तिकथनम्, दुर्दमभूपेतिहासकथनपूर्वकधर्मेशमाहात्म्यकथनञ्च ... ... .... ... .... | ३२२ | १ |
| ८२ | वीरेश्वराविर्भावप्रसंगेन मित्रजित्पराक्रमवर्णनम्, महावैष्णवस्य मित्रजिन्नृपस्य कंकालासुरं त्रिशूलेन हत्वा कंकालासुरहृतमलयगंधिनीं विद्याधरकन्यां गांधर्वेणोद्वाह्य तया सह काश्यामागमनम्, अभीष्टतृतीयाव्रतविषये राज्ञीं प्रति नृपप्रश्नश्च .... ... .... | ३२४ | १ |
| ८३ | नृपप्रश्नानुसारेण मार्गशीर्षशुक्लतृतीयायां राज्ञीनिरूपितगौरीविधिदैवताभीष्टतृतीयाव्रतनिरूपणम्, व्रतकरणाद्राज्ञीपुत्रलाभः, मूलर्क्षे जातस्य मात्रा विकटादेवीपुरतः स्थापितस्य तस्य शिशोर्देव्यनुज्ञया माहेश्वर्यादिमातृसमीपे प्रेषणम्, मातृविसृष्टस्य बालकस्यानंदकानने पंचमुद्रादेवीनिकटे तपश्चरणाच्छिवलिंगाविर्भावः, अस्यैव लिंगस्य वीरेश्वराख्याप्राप्तिस्तन्माहात्म्यकथनम्, वीरेश्वरशिवेन तस्मै राजपुत्राय नानाविधवरान्दत्त्वाकथितानामसिगंगासंगमस्थितपुण्यस्थानानां क्रमेण वर्णनञ्च .... .... .... ... .... | ३२७ | २ |
| ८४ | मित्रजिन्नृपपुत्राय वीरेश्वराख्याशिवनिरूपितानां श्रीमदादिकेशवादिभगीरथतीर्थानां कथनम् | ३३० | १ |
| ८५ | आनंदकानने शिवलिंगं संस्थाप्य बहुतपस्तप्त्वापि फलाभावाद्दुर्वाससि काशीं शप्तुमुद्यते शिवस्य लिंगादाविर्भाववर्णनम, दुर्वासःकामपूरणात्तच्छिवलिंगस्य कामेश्वराभिधानं तन्माहात्म्यकथनञ्च .... .... ... .... ..... .... .... ... | ३३३ | १ |
| ८६ | विश्वकर्मनिर्मितशिवलिंगस्य काश्यां विश्वकर्मेश्वराभिधानकथनपूर्वकतन्माहात्म्यवर्णनम् .... | ३३५ | १ |
| ८७ | दक्षेश्वरोत्पत्तिकथनपूर्वकं केनाचित्प्रसंगेन शिववैरिणो दक्षप्रजापतेः शिवौ विना यज्ञारंभवर्णनम् ... .... .... .......... .... ... .... .... | ३३८ | १ |
| ८८ | नारदमुखादध्वरवृत्तमाकर्ण्य शिववचनमनादृत्यैव सत्या दक्षयज्ञगमनम्, तत्र शिवनिंदां पितुर्मुखादाकर्ण्य परमकुपितायास्तस्या देहविसर्जनवर्णनञ्च .... .... .... .... | ३४१ | १ |
| ८९ | शिवगणवीरभद्रकृतं यज्ञविध्वंसनपूर्वकं दक्षशिरोनाशनम्, पुनःशिवकथनाद्दक्षस्य मेषवदनत्वं संपाद्य विमोचनम्, काश्यां शिवलिंगं संस्थाप्य दक्षस्य तपःकरणम् दक्षेश्वरोत्पत्तिकथनञ्च | ३४४ | १ |
| ९० | पार्वतीकृतपार्वतीशशिवलिंगस्थापनं तन्माहात्म्यनिरूपणञ्च ... .... .... .... | ३४७ | २ |
| ९१ | विश्वनाथशिवलिंगात्पूर्वतो गंगास्थापितगंगेशलिंगमाहात्म्यवर्णनम् .... .... .... | ३४८ | १ |
| ९२ | ब्रह्मणः सकाशाद्गंगासाम्यरूपं वरमलब्ध्वा काश्यां शिवलिंगं संस्थाप्य रेवायास्तपःकरणम्, नर्मदेश्वरदत्तरेवावरदानकथनपूर्वकतल्लिंगमाहात्म्यवर्णनञ्च .... ... ... .... | ३४८ | २ |
| ९३ | शिवं पतिं लब्धुं काश्यां सतीस्थापितसतीश्वरलिंगमाहात्म्यवर्णनम् ... .... .... | ३४९ | १ |
| ९४ | अमृतेश्वरकरुणेश्वरज्योतीरूपेश्वराणां शिवलिंगानां माहात्म्यवर्णनम् .... .... .... | ३५० | १ |
| ९५ | काश्यामपि भुजमूर्ध्वीकृत्य हरिः सेव्यो हरिः सेव्य इति व्यासवचनं श्रुत्वा शैलादिकृतव्यासभुजवाक्स्तम्भनवर्णनम्, विष्णुकंठसंस्पर्शनापस्तंभननिवृत्तौ व्यासकृतशिवस्तुतिवर्णनञ्च | ३५१ | २ |
| ९६ | व्यासशापमोचनकथनम्, कृच्छ्रादिस्वरूपकथनम्, व्यासस्य काशीतो बहिर्निष्कासनं च | ३५३ | २ |
| ९७ | सर्वपापापनोदनकाशीक्षेत्रस्थितसर्वतीर्थकथनम् .... ... .... .... .... | ३५८ | २ |
| ९८ | काश्यां मुक्तिमंडपे श्रीविश्वेश्वरसमागमनमहोत्सवस्य विशेषेण वर्णनम् .... .... .... | ३६४ | २ |
| ९९ | श्रीशंभुना ब्रह्मविष्ण्वादिदेवेभ्यः प्रतिपादितस्य श्रीविश्वेश्वराख्यकाशीक्षेत्रपरमदैवतस्य माहात्म्यानिरूपणम् .... .... ... .... .... ... .... | ३६७ | १ |
| १०० | काशीखंडान्तर्गतेतिहासानुक्रमवर्णनम्, पञ्चतीर्थ्यादियात्रावर्णनम, काशीखण्डश्रवणपठनफलवर्णनञ्च .... .... ... ... .... .... .... ... | ३६९ | १ |


॥काशीखंडस्थविषयानुक्रमोऽयं यथामति ॥ विरच्य श्रीविश्वनाथपदयोरर्पितो मया ॥

| अ० | विषयाः | प० | पृ० |
|---|---|---|---|
| | तेर्वर्णनम् , गणेशस्य ढुंढिनामकथनम् , भगीरथहरिश्चन्द्रकपर्दीदिगणेशस्थानकथनञ्च | २४१ | १ |
| ५८ | गणेशेऽपि विलंबिते चिंतापरवशस्य शिवस्य दिवोदासनृपस्य काशीत उच्चाटनाय विष्णुनिरूपणम्, काश्यां विष्णोर्नानाविधस्थाननिरूपणम्, विष्णुलक्ष्मीगरुडैः सौगतपरिव्राजिकाशिष्यरूपैर्बौद्धधर्मस्थापनप्रकारवर्णनम्, प्रजाऽधर्मरुचीः कृत्वा गणेशवचनानुसारेण द्विजरूपस्य विष्णोः राज्ञे शिवलिंगस्थापन कथनम्, शिवलिंगमभ्यर्च्य राज्ञो दिवोदासस्य विमानमारुह्य कैलासपुरप्रयाणवर्णनञ्च .... .... .... .... | २४९ | १ |
| ५९ | वेदशिरसो मुनेः शुचिमप्सरसं दृष्ट्वा स्खलितवीर्यस्य वीर्यात्कन्योत्पत्तिकथनम्, धूतपापाख्यकन्यायाः पितुर्वचनात्तपश्चर्याकरणम्,ब्रह्मणो वरदानात्तस्याःपावित्र्यविशेषताप्राप्तिकथनम् तां दृष्ट्वा मर्धस्य कामोद्दीपनात्परस्परं शापप्रसंगेन तयोर्नदीनदत्वप्राप्तिकथनम्, गंगायमुनासरस्वतीकिरणाधूतपापाधर्मनदसंगमात्पंचनदतीर्थकथनम् , तन्माहात्म्यकथनञ्च .... | २५१ | १ |
| ६० | अग्निबिंदुमुनिकृतविष्णुस्तुतिवर्णनम्, तत्र बिंदुमाधवावस्थानवर्णनम्, बिंदुमाधवमाहात्म्यवर्णनञ्च ... ... .... ... ... .... .... .... .... | २५४ | २ |
| ६१ | आदिकेशवताक्ष्र्यकेशवादिवैष्णवस्थानानां संक्षेपतो वर्णनम्, बिंदुमाधवनिरूपितनानास्थानतद्यात्रादिनिरूपणम् , बिंदुमाधवकथनादग्निबिंदुमुनेः सुदर्शनचक्रसंस्पर्शात्सायुज्यलाभनिरूपणञ्च .... .... .... ... .... ... ... .... | २५८ | १ |
| ६२ | दिवोदासनृपे विष्णुकथनानुसारेण कैलासपुरं प्रविष्टे विष्ण्वादीनां मंदरे हरसन्निधौ शिवानयनार्थं गमनम्, शिवकृतकपिलतीर्थवर्णनम् , कापिलतीर्थे वृषध्वजप्रादुर्भावकथनञ्च | २६४ | १ |
| ६३ | जैगीषव्यमुनितपोवर्णनम् · तस्य शिवाद्वरप्राप्तिकथनम् , ज्येष्ठेशमाहात्म्यकथनञ्च ... | २६७ | १ |
| ६४ | मंदराचलादागतं शिवं सगणं साम्बं द्रष्टुं नानातीर्थागतानां द्विजानां शिवदर्शनम्, शिवप्रणीतकाशीक्षेत्ररहस्यकथनञ्च .... .... .... ... .... .... | २६९ | १ |
| ६५ | पराशरेश्वरमांडव्येश्वरजाबालेश्वरकंदुकेश्वरादिनानाविधशिवलिंगमाहात्म्यकथनम् .... | २७२ | १ |
| ६६ | शैलेश्वरादीनां काशीक्षेत्रस्थितशिवलिंगानां निर्णयकथनम् .... .... ... .... | २७४ | १ |
| ६७ | गौरीं प्रति शिवनिरूपितरत्नेश्वराशिवलिंगमाहात्म्यकथनम्, कस्याश्चिन्नर्तक्याः शिवरात्र्यां, रत्नेश्वरसमीपे नर्तनगानादिना जागरणाच्च् शिवप्रसादेन देहान्तरे वसुभूतिनामकगंधर्वराजतनयात्वलाभवर्णनम्, रत्नावलीनाम्न्यास्तस्या गंधर्वकन्याया रत्नेश्वरलिंगवरप्रभावात् परमाश्चर्यजनकविवाहादिचरितवर्णनम्, दाक्षायणीश्वरमाहात्म्यकथनञ्च ... ... | २७८ | १ |
| ६८ | महिषासुरपुत्रस्य गजासुरस्य विधिवरादन्यावध्यस्य शूलेन शिवकृतविनाशकथनम्, कृत्तिवासेश्वरोत्पत्तिकथनम्, कृत्तिवासेशमाहात्म्यकथनञ्च .... .... ... ... | २८३ | २ |
| ६९ | नानाविधस्थानस्थितानां शुभदानामष्टषष्टिसंख्यकानामायतनानां काश्यां समागमनकथनम् | २८६ | १ |
| ७० | वेतालादिपरिवारसहितानां नवकोटिसंख्यचंडीनां काशीरक्षणाय स्थानेस्थाने स्थापनवर्णनम् .... .... .... .... .... .... .... .... .... | २९० | १ |
| ७१ | रुरुदैत्यपुत्रस्य पुंभिरजेयस्य दुर्गासुरस्य त्रैलोक्यराज्यकर्तुर्नाशाय स्वनिकटे तमानेतुं भगवत्याः कालरात्रिप्रेषणम्, कालरात्रिवचनात्ससैन्यस्य दुर्गदैत्यस्य भगवत्याः समीपे आगमनम् , युद्धोद्यतं दुर्गसैन्यं विलोक्य देवीशरीराच्छक्त्युद्गमवर्णनम्, दुर्गासुरस्य भगवत्या सह युद्धवर्णनञ्च .... ... ... .... .... .... .... | २९२ | २ |
| ७२ | भगवतीशरीरोत्पन्नशक्तीनां नामनिरूपणम्, दैत्यदेवीयुद्धवर्णनम्, दुर्गदैत्यवधसुसंतुष्टदेवकृतदुर्गादेवीस्तुतिकथनम्, दुर्गाभैरवपूजनफलकथनञ्च .... ... .... .... | २९६ | १ |
| ७३ | पार्वतीं प्रति शिवनिरूपितोंकारादिचतुर्दशलिंगगणनम्, ओंकारेशोत्पत्तिवर्णनप्रसंगेन ब्रह्मकृतोंकारस्तुतिकथनम् ओंकारेशलिंगमाहात्म्यनिरूपणञ्च ... ... .... | २९९ | १ |
| ७४ | पाद्मकल्पीयभारद्वाजसुतदमनस्य विद्यामधीत्य विरक्तस्य रेवातीरे अमरकंटकक्षेत्रे गर्गनाम्नो मुनेर्दर्शनम्, गर्गमुनिनिरूपितोंकारमाहात्म्यवर्णनञ्च .... .... .... | ३०४ | २ |
| ७५ | सप्तजन्मार्जितपापनिवारणैकदक्षत्रिलोचनेश्वराविर्भावकथनम्, तन्माहात्म्यानिरूपणञ्च .... | ३०८ | १ |
| ७६ | मणिमाणिक्यनिर्मितत्रिलोचनप्रासादास्थितपारावतद्वंद्वेतिहासकथनपूर्वकं त्रिलोचनाख्यशिवलिंगमाहात्म्यकथनम् ... ... ... .... .... .... ... | ३१० | १ |
| ७७ | केदारेश्वरमाहात्म्यकथनप्रसंगेनोज्जायिनीस्थिताद्विजदारकेतिहासकथनम् .... .... | ३१४ | १ |

श्रीगणेशायनमः ॥ श्रीपरमात्मनेनमः ॥ ॥ सच्चिदानंदसंदोहंभक्तैकामोदमंदिरम् ॥ सादरंप्रणुवेभक्त्याश्रीगोपीजनवल्लभम् ॥ १ ॥ संहारखेदादिवयःस्वयंप्रभुःश्रितोऽविमुक्तंभगवान्स होमया ॥ दिशत्यभीक्ष्णंपरमात्मतारकंभजेतमानंदवनेतनुत्यजाम् ॥ २ ॥ माधवंगिरिजांढुंढिंभैरवंदंडनायकम् ॥ मणिकर्णींगुहांकाशीमुदक्स्रोतोवहांनुमः ॥ ३ ॥ अद्वैताब्जविकास कैकतरणिंहार्दांधकारच्छिदंशांत्यादेर्निलयंदयैकशरणंवैराग्यवन्मूर्त्तिकम् ॥ हृत्कांतारमहाटवीसुविलसत्कामेभपंचाननंश्रीरामेंद्रवनाभिधंगुरुमहोभक्त्यानमामस्तराम् ॥ ४ ॥ यत्पादांबुरुहध्या नाद्धार्दंमेगलितंतमः ॥ परमंतंगुरुंभक्त्याश्रीदेवेंद्रवनंनुमः ॥ ५ ॥ व्यासोक्तेस्कांदसंज्ञेऽयंपुराणेकाशिकाह्वयः ॥ खंडोयस्तस्यटीकेयंरामानंदेनरच्यते ॥ ६ ॥ श्रीवासुदेवाभिधभूसुरेंद्रगुणैकरत्ना मलसत्त्ववार्द्धेः ॥ वाक्याग्रहेणाहमिहप्रवृत्तःक्षंतव्यमस्मच्चपलंकृतींद्रैः ॥ ७ ॥ अध्यायानांशतंप्रोक्तंव्यासेनात्रतदादितः ॥ विंध्यनारदसंवादोवर्ण्यतेतिमनोहरः ॥ ८ ॥ तत्रादौतावच्चिकीर्षितस्य पुराणस्यनिष्प्रत्यूहपरिसमाप्तिप्रचयाभ्यांनानेतिहासपुराणशास्त्रप्रबंधसंबधाविष्कृतलीलावतारोभगवान्द्वैपायनोविघ्नाधिराजंपूजयति ॥ तंमन्महइति ॥ तत्रसर्वनाम्नस्तावदौत्सर्गिकंप्रसिद्धार्थत्वम् ॥ यथाहुः ॥ सर्वनामप्रसिद्धार्थंप्रसाध्यार्थंविधानकृदिति ॥ नचयदाग्नेयोऽष्टाकपालोभवतीत्यत्रव्यभिचारः ॥ वचनानित्वपूर्वत्वादितिन्यायेनतदर्थस्यतत्रान्यतोऽलब्धत्वात्प्रसिद्धार्थत्वंसर्वनाम्नोबला दपलप्यते ॥ अत्रतुतदपवादाभावेपुनरुत्सर्गस्यस्थितिरेवेत्यभिप्रेत्यप्रसिद्धार्थमाह ॥ तमिति ॥ तंप्रसिद्धंपारमेश्वरंरूपंमन्महेध्यायामःचिंतयामेत्यर्थः ॥ मन्महइतिमनुअवबोधनइत्यस्मात्तना देर्धातोर्लडुत्तमपुरुषबहुवचनं लोपश्चास्यान्यतरस्यांम्वोरित्युकारलोपः ॥ सर्वनाम्नापरामृष्टंविशेष्यंदर्शयति ॥ करिगणेशाननमिति ॥ करःशुंडादंडोविद्यतेयेषांतेकरिणोहस्तिनइतियावत्

श्रीगणेशायनमः ॥ ॥ तंमन्महेमहेशानंमहेशानप्रियार्भकम् ॥ गणेशानंकरिगणेशाननमनामयम् ॥ १ ॥

गणाःसमूहाः करिणांगणाःकरिगणास्तेषामीशानईश्वरःश्रेष्ठइत्यर्थः ॥ तस्येवाननंतस्याननमिवाननंयस्यसतथातम् ॥ एवंहिपाद्मेश्रूयतेचक्रेश्वरमाहात्म्यप्रसंगे ॥ विघ्नाधिराजेजातेतदवलोक नायब्रह्मादयोमिलिताअभूवन्शनैश्चरस्तुनागतोभूत् ॥ ततोऽविकायांरुष्टायामागतेचतस्मिन्गणेशस्यमौलिरपतत् ॥ ततोमहादेवेनहस्तिवृंदेंद्रशिरश्छित्त्वायोजितमिति ॥ कदाचिद्गात्रोद्वर्त्तनंकृत्वा तज्जनितमलेनगणेशप्रतिकृतिंविधायजीवंचतस्यांसंचार्ययावन्मयास्नायतेतावदत्रकोप्यागंतुंनदेयइतिगौरीतंव्याजहार ततश्चतस्मिन्द्वारिस्थितेकुतश्चिदागतोमहेशस्तेनप्रतिरुद्धोंऽतःपुरंप्रवेष्टमलभमानः क्रुद्धःसन्बहुयुद्धंकृत्वापश्चात्तस्यमौलिमुज्जहार पश्चाच्छोकरोपाभ्यामाविष्टायांपार्वत्यांकरिगणेंद्रशिरश्छित्त्वायोजितमितिचभाविष्ये ॥ गजीभूयक्रीडतोर्भगवतोर्जातत्वाद्वागजाननइतिपुराणांतरम् ॥ तथाहि॥गजासुरः किललीलयास्वर्गमाक्रम्यदेवान्व्याजहार हेदेवामयासार्द्धंयुद्धचध्वंयद्वात्रिदिवंविहायपलायध्वं अथवाकरंप्रयच्छतेति ॥ ततोदेवैःकःकरोदेयइत्युक्ते तेनोक्तं स्वकर्णौधृत्वास्वाशिरोधून नंस्वशिरःकुट्टनंचमदग्रेकर्त्तव्यमिति ततोदेवाब्रह्माणंप्रतितदुक्तंन्यवेदयन् कथंतस्यासुराधमस्याग्रेऽस्माभिरेवंकर्तव्यमिति ततोब्रह्माविष्णुश्चविश्वनाथंगत्वातदेतत्सर्वंविज्ञापितवंतौ ततईश्वरेणगजोभूय क्रीडतोरावयोर्गजाननःपुत्रोजातोरिततेनसमारणीयइत्युक्त्वागणेशमाहूयतत्सर्वंनिवेद्यत्वमपिगजाननःसोपिताहशइतित्वमेवतस्यप्रतियोद्धेत्यादिप्रोत्साह्यत्वयैवहंतव्यइत्युक्तेनगणेशेनोक्तं तदामयासमा रणीयोयदितेनप्रार्थितोदंडोमह्यंदीयतइति तदादेवैरुक्तं भवानस्माकंस्वामीत्वय्यग्रेक्रियमाणेऽस्माकंखेदोनास्ति यदुच्यतेतत्कर्तव्यमिति ततोगजाननोगजासुरंहतवानित्यतएवेदानीमपिगणेशस्याग्रे

---

१ भावप्रधाननिर्देशाच्चापलमित्यर्थः । २ विघातकृदित्यपिक्वचित्पाठः ।

श्रीसार्वभौमभट्टाचार्य्यादाक्षिणात्याश्चस्वकर्णौधृत्वाशिरोधूननंशिरःकुट्टनंचकुर्वंतीति ॥ उक्तंच ॥ विनायकंवंदकमस्तकाहतिसन्नादसंघुष्टसमस्तविष्टपम् ॥ नमामिनित्यंप्रणतार्त्तिनाशनंकविंकवी
नामुपमश्रवस्तममिति ॥ कदाचिदीश्वरंद्रष्टुंकैलासंगतेनभार्गवेणरामेणगणेशप्रतिरुद्धेनाभ्यंतरंगंतुमलभमानेनतज्जनितप्रचंडकोपानलेनगणेशस्यहस्तात्परशुंबलात्कारेणगृहीत्वागणेशस्यशिरो
च्छेदि ततोज्ञाताशेषवृत्तांतेनेश्वरेणरामायाभ्यधायित्वमद्यारभ्योननपरशुनापरशुरामोभविष्यसीतिगजेंद्रस्यशिरश्छित्त्वागणेशस्यमौलौयोजितमितिचपौराणिकाः ॥ क्रियाशक्तिमत्सूत्रात्मत्वाद्धला
धिक्यमाह ॥ गणेशानमिति ॥ नन्दिभृंगिप्रमुखागणास्तेषांतेषुवाईशानमीश्वरंनियंतारमितियावत् ॥ गणश्चासावीशानश्चतंवेत्यर्थः ॥ योनितोपिश्रैष्ठ्यमाह ॥ महेशानप्रियार्भकमिति ॥
महांश्चासावीशानश्चेतिमहेशानोमहेश्वरइत्यर्थस्तस्यप्रियावल्लभाउमाचिद्रूपाशक्तिस्तस्याअर्भकस्तयोर्वाऽर्भकोमहेशानप्रियार्भकइतिवा ॥ प्रियश्चासावर्भकश्चेतिप्रियार्भकः ॥ यद्वाप्रसिद्धत्वेहेतु
माह ॥ महेशानप्रियार्भकमिति ॥ ननुपरमात्मनःसर्वात्मत्वादन्येषामपितदीयानांरूपाणांभूयसांभावादिदमेवपारमेश्वरंरूपंकस्मादादावनुस्मर्य्यतेतत्राह ॥ महेशानमिति ॥ विरोधिलक्षणया
पुण्यजनोराक्षसइतिवन्महांतोत्राकारप्रश्लेषाद्वाऽमहांतोहिंस्रस्वभावाविघ्नाःश्रेयोविघातकत्वात्तेचतेस्वकार्येप्रभुत्वादीशाश्चतानानयतिचेष्टयतिप्रवर्त्तयतीतितथातम् ॥ अथवानविद्यतेमहउत्सवोयेभ्यस्तेऽमहा
विघ्नास्तेषामीशानं विघ्नप्रोत्सारणायैवविघ्नानामधिष्ठातारमितियावत् ॥ तत्प्राप्तिस्तुप्राणिनांस्वदोषवशादितिभावः ॥ महांश्चासावीशानश्चेतिवा महत्त्वंचात्रविघ्नाधिष्ठातृत्वेनैव ॥ एतदिहाकूतम् ॥ सर्वात्मकोपि
परमात्माविघ्नाधिराजोपाधिरेवविघ्नान्जरीहर्ति ॥ तदुक्तं सजयतिसिंधुरवदनोदेवोयत्पादपंकजस्मरणं ॥ वासरमणिरिवतमसांराशिंनाशयतिविघ्नानामिति ॥ महोदयेचपुराणारंभेविघ्नानांसंभवात्तन्निरासाययुक्तं
परस्य प्रकृतदेवतात्मकस्यैवानुसंधानमितिभावः ॥ यद्वा ननुकृष्णद्वैपायनंविद्धिसाक्षान्नारायणंप्रभुम् । कोह्यन्यः पुंडरीकाक्षान्महाभारतकृद्भवेदितिवैष्णवाद्युक्तेर्व्यासस्येश्वरत्वावगमाद्विघ्नाएवनसं
भाव्यंतेऽतःकथंतन्निवृत्त्यर्थंगणेशानुस्मरणमित्याशंकायामाह ॥ महेशानमिति ॥ महांश्चासावीशानश्चेतिमहेशानस्तम् ॥ अत्रापिमहत्त्वंब्रह्मादिनियंतृत्वेनैववोद्धव्यम् ॥ तथाचायमर्थःसंपद्यते ॥ महतां
ब्रह्मादीनामीशानंनियंतारम् अपूजितंसंततत्कार्याणांप्रतिवद्धारमसिद्धिप्रदमित्यर्थः ॥ तदुक्तंसंक्षेपशारीरके ॥ आरंभाःफलिनःप्रसन्नहृदयोयश्चेत्तिरश्चामपिनोचेद्विश्वसृजोप्यलंविफलतामायांत्युपायो
द्यमाः । विश्वैश्वर्यमतोनिरंकुशमभूद्यस्यैवविश्व प्रभोःसोऽयंविश्वहितेरतोविजयतेविघ्नेश्वरोविश्वकृत् ॥ अत्रापिचवक्ष्यति ॥ जयसृष्टिकृतांवन्द्य त्वदुष्टदृष्टिविशिखैर्निहतान्निहन्मिदैत्यान्पुरांधकजलं
धरमुख्यकांश्च । कस्यास्तिशक्तिरिह यस्त्वदृतेपितुच्छंवांछेद्विधातुमिहसिद्धिदकार्य्यजातमित्यादि ॥ इदमत्रतत्त्वम् ॥ गणेशव्यासादीनामीश्वरत्वाविशेषेपिसेव्यसेवकत्वंवाध्यवाधकत्वं च । यथोभेशरमे
शयोर्यथावारामपरशुरामयोरिति ॥ तदुक्तंवैष्णवे सर्वंविष्णुमयंजगदित्युपक्रम्य ॥ तथाप्यनेकरूपस्यतस्यरूपाण्यहर्निशं । वाध्यवाधकतांयांतिकल्लोलाइवसागरइति ॥ नन्वसिद्धंमहेशानत्वंगणेशस्य
शनैश्चरावलोकमात्रेणशिरःपाताद्यवगमादित्याशंक्याहानामयमिति ॥ आमयोरोगस्तेनतापत्रयंलक्ष्यते ॥ ततश्चायमर्थः ॥ नविद्यतेआमयस्तापत्रयंयस्ययस्तादितिवासतथातम् ॥ अयंभावः ॥
नशिरःपातादिकमनीश्वरत्वेकारणमवश्यंभाविनोऽर्थस्येश्वरस्यापिदुष्परिहरत्वात् ॥ तदुक्तम् ॥ अवश्यंभाविनोभावाभवंतिमहतामपि । नग्नत्वंनीलकण्ठस्यमहाहिशयनंहरेरिति ॥ यद्वा शिरः
पातादिकंतुलीलामात्रंयथानिकुंभपरिघप्रहारेणमोहःश्रीकृष्णस्य यथाचेंद्रजित्प्रयुक्तनागपाशबंधनंश्रीदाशरथेर्यथावावलेरध्वरेयाच्ञाश्रीविष्णोरिति ॥ तदुक्तंहरिवंशे ॥ नूनमात्मेच्छयाकृष्णस्त
थाचक्रेसुरोत्तमः कोहिशक्तोमहात्मानंयुद्धेमोहयितुंहरिम् ॥ भागवतेच ॥ कोवेत्तिभूमन्भगवन्परात्मन्योगेश्वरोतीर्भवतस्त्रिलोक्याम् ॥ क्वाहोकथंवाकतिवाकदेतिविस्तारयन्क्रीडसियोगमायामिति ॥
श्रुतौचाविष्णोः शिरःप्रचिच्छिदतुरिति ॥ यद्वा ग्रंथारंभेमंगलायपञ्चायतनदेवतानुसंधानमनुविधत्ते ॥ तामिति ॥ तंप्रसिद्धम् ॥ अत्राऽकारप्रश्लेषात् अःवासुदेवश्चासौमहेशानश्चतंमन्महे
ध्यायामइतिसर्वत्र ॥ तत्रअमित्युक्तेअक्षराणामकारोस्मिइतिभगवद्वचनादकाराक्षरेगच्छतितद्वारणायमहेशानमित्युक्तम् ॥ तावत्युक्तेविश्वनाथेगच्छतितद्वारणायअकारोवासुदेवःस्यादितिवचनाद
मित्युक्तम् ॥ महेशानप्रियार्भकं ॥ विश्वनाथभवानीगणेशेतिद्वंद्वैकवद्भावेनत्रयंनिर्दिष्टम् ॥ तत्रार्भकमित्युक्तेशाखविशाखादावतिव्याप्तिःस्यात्तद्वारणायगणेशानमित्युक्तम् ॥ तथापिस्वा

मिकार्तिकेयेगच्छतितद्वारणायकरिगणेशानाननामिति ॥ अत्रसमासनिष्ठस्यार्भकपदस्यविशेष्यत्वंछांदसम् ॥ तत्कथ्यतांमहाभागयदिविष्णुकथाश्रयम् अथवास्यपदांभोजमकरन्दलिहांसता मिति तथाप्राचीनवर्हिर्भगवान्पाताळतलचारिणः समुद्रतनयायातुकृतदारोऽभवत्प्रभुरितीत्यादिवद्बोद्धव्यम् ॥ अनामयंनविद्यतेआमयोरोगमात्रंयस्मात्तंसर्वरोगनाशकंसूर्यविरंचिनारायणशंकरात्मकम् ॥ आरोग्यंभास्करादिच्छेदितिवचनादित्यर्थः ॥ १ ॥ एवंविघ्नाधिराजंप्रपूज्यजगन्निःश्रेयसमाशासानःपुराणार्थाश्रयभूतमविमुक्तंप्रस्तौति ॥ भूमिष्ठेति ॥ साकाशीअपायाज्जगत्पायादित्यन्वयः ॥ सेतिप्रसिद्धेत्यर्थः ॥ प्रसिद्धत्वंचास्याःसोऽविमुक्तेउपास्योयएषोऽनंतोऽव्यक्तआत्मासोऽविमुक्तेप्रतिष्ठितइत्याद्ययाश्रुत्यावोद्धव्यम् ॥ अविमुक्तंकाशीत्यनर्थांतरम् ॥ तत्त्वग्रेवक्ष्यति ॥ काशीति ॥ अनाख्येयंस्वप्रकाशंचैतन्यंप्रकाशतेस्यामितिकाशी ॥ तथाचवक्ष्यति ॥ काशतेऽत्रयतोज्योतिस्तदनाख्येयमीश्वरः ॥ अतोनामापरं चास्तु काशीति प्रथितं प्रभो ॥ यद्वा काशंतेराजंते स्वप्रकाशतयाऽस्यांतनुत्यागमात्रेणप्राणिनइतिकाशी ॥ एतदप्युक्तमत्रैव ॥ कीटाःपतंगामशकाश्चवृक्षाजलेस्थलेयेविचरंतिजीवाः ॥ मंडूकमस्त्याःकृमयोपिकाश्यांत्यक्त्वाशरीरंशिवमाप्नुवंतीत्यादि ॥ अत एवोक्तंअपायाज्जगत्पायादिति ॥ अपगतोऽयनमयोज्ञानम् ॥ सर्वेगत्यर्थाज्ञानार्थाइतिन्यायाद्यस्मिन्नित्यपायमज्ञानंतत्कार्यंतस्मात् ॥ गच्छतिजन्मादिषड्भावविकारान्प्राप्नोति ॥ सर्वेगत्यर्थाः प्राप्त्यर्थाइतिन्यायाज्जगत्समष्टिव्यष्टिजीवजातमित्यर्थः ॥ पायान्मोचयत्वित्यर्थः ॥ यद्वासर्वाभ्योऽयोध्यादिपुरीभ्योऽधिकतयाकाशतेराजतइतिकाशी ॥ वक्ष्यतिहि । अन्यानिपुण्यक्षेत्राणि काशीप्राप्तिकराणिवै । काशींप्राप्यविमुच्येतनान्यथाकल्पकोटिभिरिति ॥ अधिकत्वेजगन्मोचकत्वेचहेतुंवदन्विरोधाभासालंकारलक्षणैश्चतुर्भिर्विशेषणैर्विशिनष्टि ॥ भूमिष्ठेत्यादियस्यांमृताजंतवइत्यं

भूमिष्ठापिनयात्रभूस्त्रिदिवतोप्युच्चैरधःस्थापियायाबद्धाभुविमुक्तिदास्युरमृतंयस्यांमृताजंतवः ॥
यानित्यंत्रिजगत्पवित्रतटिनीतीरेसुरैःसेव्यतेसाकाशीत्रिपुरारिराजनगरीपायादपायाज्जगत् ॥ २ ॥

तेन ॥ भूमिष्ठापिनयात्रभूरितिविरोधाभासःसर्वत्रस्पष्टएव ॥ भूमौतिष्ठतीतिभूमिष्ठा ॥ अंवांवगोभूमिसव्येत्यादिनाषत्वम् ॥ भूमिष्ठत्वेनभूम्यवयवत्त्वेनायोध्यादिक्षेत्रवत्प्रतीयमानापियाकाशीअत्रभूमौ भूर्नभवति भूम्यधिकरणिकाभूर्नभवति भूमौनतिष्ठतीतियावत्॥अन्यैवेयंकाचिद्भूरित्यर्थः॥ईश्वरस्यत्रिशूलाग्रेस्थितत्वात् ॥ वक्ष्यतिच ॥ क्षेत्रमेतत्त्रिशूलाग्रेशूलिनस्तिष्ठतिद्विज अन्तारिक्षेनभूमिष्ठंनेक्षंते मूढवुद्धयःभूर्लोकेनचसंलग्नमंतरिक्षेममालयम् विमूढास्तंनपश्यंतिमुक्ताःपश्यंतिचेतसेत्यादि ॥ त्रिदिवतोप्युच्चैरधःस्थापियेति॥अधस्तिष्ठतीत्यधःस्थाभुवर्लोकादीनांषण्णांमध्यस्थापियाकाशीत्रिदिवतोप्युच्चैस्त्रिदिवतोप्युपरितिष्ठतीत्यर्थः ॥ प्रलयसमयएवत्रिशूलाग्रेणोर्ध्वीकृत्यविश्वनाथेनधृतत्वात् ॥ तत्रदैनंदिनप्रलयेत्रिदिवतःस्वर्लोकादित्येव ॥ प्राकृतप्रलयेतुत्रयोब्रह्मविष्णुमहेश्वरादीव्यंतिक्रीडंत्यस्मिन्नितित्रिदिवंब्रह्मांडंतस्मादितिव्याख्येयम्॥तथाचवक्ष्यति॥अहोजनानांजडताविहायकाशींयदन्यत्रनयंतिचेतः ॥ परिस्फुरद्गांगजलाभिरामांकामारिशूलाग्रधृतांलयेपि॥महासंवर्तसंवृत्ततापाद्विश्वेशपालिताम् स्वर्धुन्याहारयष्ट्येवराजितांकण्ठभूमिषु ॥ सनत्कुमारसंहितायांच ॥ गतेपरार्द्धद्वितयेविलीनेजगत्यशेषेमयिदेविसर्वे रक्षंतिसर्वैर्विविधायुधौघैर्वाराणसींकाशितसूक्ष्मसिद्धिमिति ॥ ननुदैनंदिन प्रलयेत्रिशूलाग्रेणमहेशेनोर्ध्वीकृत्यधृतत्वात्कथंचित्काशीतिष्ठतुनाम प्राकृतेतुप्रलयेप्रकृतिकार्यमात्रस्यसर्वस्यविलयात्कथंकाशीतिष्ठेत्कुतस्तरांगणाःकुतस्तमांत्रिशूलमिति ॥ किंचधर्त्तुर्विश्वनाथस्याप्यभावःश्रूयते ॥ तथाचोक्तवान्वासिष्ठेभगवान्रामः ॥ परमेष्ठ्यपिनिष्ठावान्हियतेहरिरप्यजः भवोप्यभावमायातिकैवास्थामादृशेजनेइति ॥ तस्मात्तदेतत्सर्वमर्थवादमात्रमिति न भूर्लोकेनचसंलग्नंतत्क्षे

त्रंत्वंतरिक्षगं अयोगिनोनवीक्षंतेपश्यंत्येवचयोगिनः अविमुक्तमिदंक्षेत्रमपिब्रह्मांडमध्यगम् ब्रह्मांडमध्येनभवेत्पंचक्रोशप्रमाणतः यथायथाहिवर्द्धेतजलमेकार्णवस्यच तथातथोन्नयेदीशस्तत्क्षेत्रंप्रलया
दपि क्षेत्रमेतत्त्रिशूलाग्रेशूलिनस्तिष्ठतिद्विजाः अंतरिक्षेनभूमिष्ठंनेक्षंतेमूढबुद्धयः यावंतोभास्वतःस्पर्शाद्भासंतेसैकताःकणाः तावंतोद्रुहिणाजग्मुर्नैत्येपामणिकर्णिका तामसींप्रकृतिंप्राप्यकालोभूत्वाचराचरम
ग्रसामिलीलयादेविकाशींरक्षामियत्नतः सामाणिकर्णिकेतीयंनाभिर्गांभीर्यभूमिका ब्रह्मांडगोलकंसर्वंयस्यामेतिलयोदयम् नयदाभूमिवलयंनयदापांसमुद्भवः तदाविहर्त्तुमीशेनक्षेत्रमेतद्विनिर्मितम् अभावः
कल्प्यतेमूढैर्यदाचशिवयोस्तयोः क्षेत्रस्यास्यतदाभावः कल्प्योनिर्वाणकारिणेत्याद्यभ्यासदर्शनात्॥अभ्यासेहिअर्थस्यभूयस्त्वंदूरतस्तूपचरितार्थत्वम्॥यथाअहोरमणीयारमणीयालक्ष्मीरिति ॥ पुराणेष्व
र्थवादत्वंयेवदंतिनराधमाः तैरार्जितानिपुण्यानितद्वदेवभवंतिहि समस्तकर्मनिर्मूलसाधनानिनराधमः पुराणान्यर्थवादेनमृतोनरकमश्नुते यावद्ब्रह्मासृजत्येतज्जगत्स्थावरजंगमम् तावत्सपच्यतेपापीनरकां
तेषुसंततम् अहोहिवाक्येचतुरक्षरेद्वेपुण्यस्यपापस्यनिदानभूते उच्चारणादेवनृणांमुनीन्द्रानारायणश्चेतितथार्थवादः॥ पुराणेषुद्विजश्रेष्ठाःसर्वधर्मप्रवक्तृषु प्रवदन्त्यर्थवादत्वंयेतेनरकभाजनाइत्यादीनांचभूय
सामर्थवादवक्तृनिंदापराणांबृहन्नारदीयेदर्शनात् ॥ शैवेच वेदाःप्रतिष्ठितादेविपुराणेनात्रसंशयः पुराणमन्यथाकृत्वातिर्यग्योनिमवाप्नुयात् सुशांतोपिसुदांतोपिनगतिंप्राप्नुयात्कचिदित्यादि ॥ अत्रापि
चवक्ष्यति॥उदाहरंतियेमूढाःकुतर्कबलदर्पिताः काश्यांसर्वार्थवादोयंतेविट्कीटायुगेयुगइत्यादि ॥ तर्हियुक्तिविरोधस्यकागतिरितिचेद्येवगतिस्सैवगतिरितिब्रूमः ॥ नहिश्रुतिस्मृतीहासपुराणात्माभगवान्
वराकेणयुक्तिविरोधेनास्माभिरनुयोक्तव्यः ॥ तथाचश्रुतिः॥नैषामतिस्तर्केणापनेयेति॥ननुग्रावाणःप्लवंते यजमानःप्रस्तरइत्यादीनां वेदवाक्यानामप्यर्थवादोदृश्यतेतद्वदत्रापिभविष्यतीतिचेद्दृश्यतांनाम
पुराणानांतुतदपवादस्योक्तत्वादिति ॥ किंचप्राकृतप्रलयेब्रह्मांडतदन्तर्वर्तिनांलयेनभवितव्यं नचकाशीब्रह्मांडगा ॥ तथाचात्रैववक्ष्यति दर्शितमेवतत्पूर्वम् ॥ अविमुक्तमिदंक्षेत्रमपिब्रह्मांडमध्यगं ब्रह्मां
डमध्येनभवेत्पञ्चक्रोशप्रमाणतः यथायथाहिवर्द्धेतजलमेकार्णवस्यच तथातथोन्नयेदीशस्तत्क्षेत्रंप्रलयादपीत्यादि ॥ अतोब्रह्मांडाद्बहिःस्थितायाःकाश्याःकुतोनाशावकाशोभुशुंडवत् ॥ तथाच
वासिष्ठेनिर्वाणप्रकरणेभुशुंडाख्यानेभुशुण्डवाक्यम् ॥: ब्रह्मांडपारमासाद्यतत्त्वांतेविमलेपदे सुषुप्तावस्थयातावत्तिष्ठामिप्रलयेसति यावत्पुनःकमलजःसृष्टिकर्मणितिष्ठति तत्रप्रविश्यब्रह्मांडंतिष्ठामि
विहगालयइति ॥ श्लोकद्वयस्यायमर्थः ॥ प्रलयेप्राकृतप्रलयेसतिब्रह्मांडस्यपारंबहिर्भागमासाद्यतत्त्वांतेब्रह्मांडावरणभूतानामप्तेजोवाय्वाकाशाहंकारमहत्प्रकृतिरूपाणांसप्तानामंतेविमलेपदेसुषुप्तावस्थ
यासमाध्यवस्थयातावत्तिष्ठामियावत्कमलजःपुनःसृष्टिकर्मणितिष्ठति ॥ तदापुनःसृष्टौब्रह्मांडंप्रविश्यविहगालयेतिष्ठामीति ॥ अन्यथाब्रह्मांडमावरणानिचभित्वालिंगशरीरेणवैकुंठंगतानामपिवि
देहकैवल्यप्रसंगात् ॥ यत्त्वत्रब्रह्मांडपारमासाद्येत्यत्रमहाप्रलयसंपत्तावितिपाठंप्रकल्प्यमहाप्रलयसंपत्तावित्यादिचिरजीवित्वातिरेकार्थवादः ॥ ब्रह्मणासहतेसर्वेसंप्राप्तेप्रतिसंचरे । परस्यांतेकृतात्मानः
प्रविशंतिपरंपदम् तेब्रह्मलोकेषुपरांतकालेपरामृताःपरिमुच्यंतिसर्वेइत्याद्यागमाज्जीवन्मुक्तानामधिकारिणांमहाप्रलयेविदेहमुक्त्यवगमादित्यद्वयारण्यश्रीचरणैरुक्तम्॥तन्न ॥ तेषामागमानांब्रह्मांडांतरव
स्थितजीवन्मुक्तविषयत्वाद्ब्रह्मांडबहिर्गतानांतदभावात् ॥ एतेननाहोनरात्रिर्नंनभोनभूमिर्नासीत्तमोज्योतिरभून्नचान्यत् श्रोत्रादिबुद्ध्याद्युपलभ्यमेकंप्राधानिकंब्रह्मपुमांस्तदासीत् तद्धेदंतर्ह्यव्याकृतमा
सीत्सदेवसोम्येदमग्रआसीत् इत्यादिश्रुतिस्मृतीनांविरोधाभावोपिव्याख्यातः ॥ विशेषतोविरोधाभावमग्रेव्याख्यास्यामः ॥ यत्तुदैनंदिनेथप्रलयेत्रिशूलकोटौसमुत्क्षिप्यपुरींहरःस्वाम् विभर्त्तिसंवर्त्तमहा
स्थिभूषणस्ततोहिकाशीकलिकालवर्जितेति ॥ तत्तुनप्राकृतप्रलयव्यावृत्यर्थम् ॥ अप्यर्थेनाथशब्देनमहाप्रलयस्यसमुच्चीयमानत्वात् ॥ अतएवसंवर्त्तमहास्थिभूषणइतिविशेषणम् ॥ अन्यथामहापद
घटितस्यैतस्यास्थिशब्दस्यैवयर्थ्यापातात् ॥ कलिकालवर्जितत्वेवास्यतात्पर्यम् ॥ किंचप्राकृतेप्रलयेप्राकृतानांप्रकृत्यधीनानामेवलयेनभवितव्यम् नचकाश्यादिकंप्राकृतंकिंत्वचिंत्यशुद्धसत्त्वात्मक
मेवेश्वरेच्छयाव्यक्तीभावमापन्नंश्रीकृष्णशरीरवत् ॥ नचासिद्धोदृष्टांतः ॥ नराकृतिपरंब्रह्मेत्यादिबहुतरवचनविरोधात् तेषामर्थांतरकल्पनायांकारणाभावात् भक्तानुग्रहार्थंब्रह्मणएवस्वाधीनयामाय
यादेहाकारतोपपत्तेश्च ॥ तथाचस्कांदेस्वामिकार्त्तिकेयवाक्यम् ॥ कैवल्यंयत्परंब्रह्मनिराकारमगोचरं तच्चमूर्त्यापरिणतंभक्तानांभक्तिहेतुतइति॥विष्णुपुराणेच॥नाकारणात्कारणाद्वाकारणाकारणान्नच

शरीरग्रहणंव्यापिन्धर्मंत्राणायतेपरमिति अतएवोक्तंश्रीधरस्वामिना ॥ जीवस्यानाद्यविद्यामिथ्याभूतदेहसंवंधः ईश्वरस्यतुचिद्घनलीलाविग्रहाविर्भावइतिमहान्विशेषइति ॥ तथाचमहतांवचनमुप
निषदर्थमुलूखलेनिवद्धामिति ॥ किंच कृष्णशरीरस्यजगत्कारणत्वात्तन्नाशेदाहेवाजगतोपिनाशदाहप्रसंगात् ॥ कृष्णशरीरस्यजगत्कारणत्वंचित्सुखाचार्येणब्रह्मस्तुतौतनुभूतमयस्येत्यत्रतनुभिः
सूक्ष्मरूपैराब्रह्मस्तंवपर्यंतंभूतैर्व्याप्तस्यकारणशरीरस्येत्युक्तत्वात् ॥ अतएवतन्नपांचभौतिकं तेषांततएवोत्पत्तेः ॥ नचशरीरत्वात्पांचभौतिकत्वमनुमेयम् ॥ तत्रस्वकर्मजन्यत्वस्योपाधित्वात्
नचपुत्रादिकर्मजन्यशरीरेव्यभिचारः ॥ आत्मावैजायतेपुत्रः अर्द्धोवाएषआत्मनोयत्पत्नीतिश्रुतेस्तत्रापिस्वकर्मजन्यत्वसत्त्वात् नचधर्तुरभावोब्रह्मविष्णुशंकरभावमापन्नस्यैवेक्षणमात्रेणधारकत्वात् ॥
ससेतुर्विधृतिरेतेषांलोकानामसंभेदायेतिश्रुतेः ॥ नचब्रह्मादिदेहानामंतर्द्धानवत्काश्यादिशरीराणामप्यंतर्द्धानेनभवितव्यमितिवाच्यम् ॥ ईश्वरेच्छायाःस्वतंत्रत्वात् ब्रह्मादिदेहानतर्द्धायापिकाशी
गणास्त्रिशूलंचरक्षणीयमित्येताहश्याअपीच्छायाःऽसृक्षादिवत्सभवात् ॥ नचब्रह्मादिदेहानामप्यंतर्द्धानमस्ति तेषांदेहानामप्रलीयमानत्वात् ॥ तथाचोक्तं पंचात्मकस्यविष्णोरहमेवाग्र
इतिसाधारणलक्षणात्मकेपद्येकैवल्यदीपिकाकारेण ॥ नापिसाकारेषुचतुर्व्वव्याप्तिस्तेषामाकारातिरोहितत्वादिति ॥ नचैककालीनाःसर्वेपरमाणवःसमग्रोपादेयप्रवंधशून्याःआरंभकत्वात्
नष्टपवनारंभकपरमाणुवदित्यादिनैयायिकादिसमयसिद्धप्रलयसाधकानुमानात्काश्यादिदेहानामप्यंतर्द्धानेनभवितव्यमितिवाच्यम् ॥ नरशिरःकपालानुमानवत्स्मृत्यातस्यवाधितविषयत्वादितिसंतो
ष्टव्यमलमितिविस्तरेण ॥ सनत्कुमारसंहितादिवचनानुसारेणैतद्व्याकृतमास्माभिरतःस्वसिद्धांतरोपकपायीकृतनयनैर्नैयायिकादिभिःशिरःकुट्टनंनविधेयमिति ॥ पंचानांयच्छब्दानांसैत्यने
नान्वयः ॥ यावद्धाभुविमुक्तिदेति ॥ याकाशीभुविवद्धापिभूमंडलेवद्धत्वेनप्रतीयमानापिमुक्तिदाभवतीतिपूर्वस्यापेरनुषंगः ॥ मनुष्यत्वेनप्रतीयमानोपिदाशरथिर्यथामुक्तिदइत्यभिप्रायः ॥
अत्रहिजंतोःप्राणेपूत्क्रममाणेपुरुद्रस्तारकंब्रह्मव्याचष्टेयेनासावमृतीभूत्वामोक्षीभवतितस्मादविमुक्तमेवनिषेवेताविमुक्तंनविमुंचेदित्यादिश्रुतेः ॥ नचात्रभूमिष्ठेत्यनेनपुनरुक्तिर्विरोधाभासभेदेनार्थभेदो
पलंभात् ॥ अतएवस्युरमृतंयस्यांमृताजंतवइति ॥ यस्यांकाश्यांमृताजंतवःप्राणिनोऽमृतंकैवल्यंस्युः कैवल्यभाजोभवंतीत्यर्थः ॥ यद्वाकेनप्रकारेणमुक्तिदास्यादितिपृच्छायामाह
स्युरमृतंयस्यांमृताजंतवइति ॥ यद्वाऽतिप्रसंगंवारयति स्युरमृतंयस्यांमृताजंतवइति ॥ अथवायेभुविवद्धाःस्वभूमौसंवद्धाःकृतवसतयइत्यर्थः ॥ तेषांमुक्तिदाजीवन्मुक्तिदेत्यर्थः ॥ अत्रा
ध्याहृत्ययोजनासोढव्या ॥ तथाचोक्तंपाद्मे ॥ काश्यांतिष्ठंतियेकेचित्तान्पश्यंतिसुरोत्तमाः चतुर्भुजांस्त्रिनयनान्गंगोद्भासितमूर्द्धजानिति ॥ अत्रापिचवक्ष्यति ॥ येवसंतिसदाकाश्यामापंचत्व
विनिश्चयाः जीवन्मुक्तास्तुतेज्ञेयावंद्याःपूज्यास्तएवहीति ॥ एवंजीवन्मुक्तिमभिधायविदेहमुक्तिमाह ॥ स्युरमृतामिति ॥ समानमन्यत् ॥ स्युरमृताइतिक्वचित्पाठस्तदाम्रियंतइति
मृतानमृताअमृताः ॥ मरणमित्युपलक्षणं जन्मादिषड्भावविकाररहिताभवंतीत्यर्थः ॥ गंगाश्रितत्वाच्चास्याःश्रेष्ठत्वमाह ॥ यानित्यंत्रिजगत्पवित्रतटिनीतीरेइति ॥ त्रीणिचतानिजगंतिचे
तित्रिजगंतितानिपवित्रयतीतित्रिजगत्पवित्रागंगा ॥ तदुक्तंभागवते ॥ यस्यामलंदिवियशःप्रथितंरसायांभूमौचतेभुवनमंगलदिग्वितानं मन्दाकिनीदिविचभोगवतीतिचाधोगंगेतिचेहचरणांवुपुनाति
विश्वमिति ॥ तट्तीरंवर्त्ततेऽस्याइतितटिनीत्रिजगत्पवित्राचासौतटिनीचत्रिजगत्पवित्रतटिनीगंगातस्यास्तीरेयाकाशीवर्त्तते ॥ त्रिजगत्पवित्रतटिन्यागंगयायानित्यमाश्रितेत्यर्थः ॥ एवंहिश्रूयते
सनत्कुमारसंहितायाम् ॥ यत्संपर्कात्पवित्रत्वंगंगायात्येवसर्वतः पूर्वंविनिःसृतादेविमममौलिमहालयात् अत्रागत्यपुनर्देविगंगापुण्यतमाभवत् पवित्रमाद्यंस्वयमेवगंगापुनश्च्युताविष्णुपदात्ततोपि
ब्रह्मादिलोकादपिमूर्ध्निशंभोर्निपातनाद्भूतिसुपांडुरांगा उन्मथ्यमार्गंचभगीरथस्यकाशींप्रविश्याथविमुक्तमंतारीत्यादि ॥ पारावारविहारेणविश्लेषशंकांवारयति ॥ नित्यमिति ॥ ब्रह्मादिभिःसेव्य
त्वादपिश्रेष्ठतामाह ॥ सुरैःसेव्यते इति ॥ येत्यनुषंजनीयंनित्यमितिच ॥ कादाचित्कसेवांवारयाति ॥ नित्यमिति ॥ यानित्यांत्रिजगत्पवित्रतटिनीतीरेसुरैःसेव्यतइत्येकंवाक्यम् ॥ अयमभि
प्रायः ॥ अस्माभिःसेव्यमानापीयंसुरनदीत्रिजगत्पुनानापिस्वर्गालयापिकेनापिसुखनिमित्तेनकाशीमधितिष्ठत्यतोऽसौसांद्रानंदखनिरितिनिश्चित्यदेवैर्नित्यंसेव्यतइति ॥ अधिष्ठातृद्वारापिश्रैष्ठ्य

